# मंगलाष्टकम्

गुणिगणकाकटपीठमहाकुटलासिनि वासिनि हासिनि हे

शिवसुखदायिनि कामविनाशिनि भोगविलासिनि शायिनि हे ।

कमलदलाश्रितमोहिनि मानिनि कामकलामयि मंजुले हे

जय जयशंकरदेहविहारिणी मंगलकारिणि मंगले हे ॥१॥

झमझमझंकृतझंकृतघुंगुरडंकृतडंम्बरुनादिनि हे

सारिगमवादिनि वाद्यविनोदिनि शब्दविनोदिनि हंसिनि हे ।

धवलितचारुचराचरचारिणि झंकडवासिनि मंजुले हे

जय जयशंकरदेहविहारिणी मंगलकारिणि मंगले हे ॥२ ॥

हिमकुलजे विरजे भुवनेश्वरि याजपुरेश्वरि पालिनि हे

महिषमहापशुलांगुलधारिणि शूलविभेदिनि मारिणि हे ।

दनुजविनाशिनि पाविनि तारिणि मोक्षविधायिनि मंजुले हे

जय जयशंकरदेहविहारिणी मंगलकारिणि मंगले हे ॥३ ॥

घटग्रामवासिनिभंजविनोदिनि दुर्गतिहारिणि तारिणि हे

कनकनिभामयि योगिनि भोगिनि सिन्दूरकज्जल धारिणि हे ।

मृगमदकुंकुमकर्पूरअंजनिकेशररंजिनि मंजुले हे

जय जयशंकरदेहविहारिणी मंगलकारिणि मंगले हे ॥४ ॥

शुभफलदायिनि भाग्यविधायिनि यज्ञविकाशिनि पालिनि हे

भगवति पाविनि शोकविनाशिनि लोकविनोदिनि मन्त्रिणि हे ।

कुलजनवर्धिनि दुष्टविमर्दिनि वाणपुरेश्वरि मंजुले हे

जय जयशंकरदेहविहारिणी मंगलकारिणि मंगले हे ॥५ ॥

सुरनरतारिणि क्षेत्रविराजिनि राजराजेश्वरि सारिणि हे

हरिपददायिनि मुक्तिविधायिनि शान्तिप्रदायिनि पारिणि हे ।

विमलविहारिणि श्रीविमलेश्वरि शंखनिवासिनि मंजुले हे

जय जयशंकरदेहविहारिणी मंगलकारिणि मंगले हे ॥६ ॥

किसलयमालिनि गौरवशालिनि चक्रवराभयधारिणि हे
मलयजवासिनि रोगविनाशिनि भोगविकाशिनि योगिनि हे ।
सुरनरसेविनि शोणितचर्चिनि वांकिविनोदिनि मंजुले हे
जय जयशंकरदेहविहारिणी मंगलकारिणि मंगले हे ॥७ ॥

कटकपटियसि सुन्दरि माहिषि माहिषमर्दिनि मोहिनि हे
असुरकपालविधारिणि शेखरि चण्डि महासुरनाशिनि हे ।
कलितकलारुचिधारिणि मारिणि तारणकारिणि मंजुले हे
जय जयशंकरदेहविहारिणी मंगलकारिणि मंगले हे ॥८ ॥

इतिश्रीप्रदीप्तनन्दविरचितं मंगलाष्टकं संपूर्णम्